TRIVANDRUM SANSKRIT SERIES.
No. LXXIII.


श्रीमधुसूदनसरस्वतीप्रणीतः

# ईश्वरप्रतिपत्तिप्रकाशः ।

THE

# ÎSVARAPRATIPATTIPRAKÂSA

OF

MADHUSÛDANA SARASVATÎ

EDITED BY

MAHÂMAHOPÂDHYÂYA
T. GAṆAPATI SÂSTRÎ
*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

UBL'SHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

'3.

TRIVANDRUM:
NTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1921.

TRIVANDRUM SANSKRIT SERIES.
No. LXXIII.



# THE
# ÎSVARAPRATIPATTIPRAKÂSA

BY

MADHUSÛDANA SARASVATÎ

EDITED BY

MAHÂMAHOPÂDHYÂYA
T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1921.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७२.

# ईश्वरप्रतिपत्तिप्रकाशः

श्रीमधुसूदनसरस्वतीप्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
महामहोपाध्यायेन
त. गणपतिशास्त्रिणा
संशोधितः ।

---

स च
अनन्तशयने
महामहिमश्रीमूलकराभवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

---



कोलम्बाब्दाः १०९६, क्रैस्ताब्दाः १९२१.




# PREFACE.

THIS small work known as Īsvarapratipattiprakāsa establishes the existence of the Īsvara by way of arguments, removing the oppositions of the opponents. The author is the venerable saint Madhusūdanasarasvati, well-known as the author of many important works such as Gūḍhārthadīpikā a commentary on the Bhagavadgītā, and others. On his famous work Advaitasiddhi, has been written the commentary Chandrikā by Gauḍabrahmānanda the fellow-student of the great Naiyāyika Gadādharabhaṭṭāchārya.

The edition of the work is based on a palm-leaf manuscript in Malayalam characters belonging to Brahmasri Subrahmanya Raja of Edappalli.

Trivandrum,
15th August 1921 } T. GAṆAPATI SĀSTRĪ.

# निवेदना ।

ईश्वरप्रतिपत्तिप्रकाशो नामायं तनीयान् ग्रन्थ ईश्वरं प्रति या वादिविप्रतिपत्तयस्ता निराकृत्य युक्त्या संप्रतिपत्तिं प्रकाशयंस्तद्गतान् विशेषान् निरूपयति ।

गीतागूढार्थदीपिकादिबहुग्रन्थकर्तृतया प्रथितः श्रीमान् मधुसूदनसरस्वत्याख्यः परमहंसोऽस्य प्रणेता । अस्यैव कृतिमद्वैतसिद्धिं महानैयायिकश्रीगदाधरभट्टाचार्यसब्रह्मचारी तत्रभवान् गौडब्रह्मानन्दः चन्द्रिकाभिधानया स्वव्याख्यया सभाजितवान् ।

इटप्पळ्ळि श्रीसुब्रह्मण्यराजसम्बन्धिनं केरलीयग्रन्थलिपिं तालपत्रादर्शमाश्रित्य ग्रन्थोऽयं संशोधितः ॥

अनन्तशयनम्
१५—८—१९२१

त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीमधुसूदनसरस्वतीप्रणीतः

# ईश्वरप्रतिपत्तिप्रकाशः ।

---

अन्तर्यामी समस्तेशो वादिविप्रतिपत्तिभिः ।
यः क्रीडति परानन्दस्तं वन्दे नन्दनन्दनम् ॥

अथ कीदृशस्ता वादिविप्रतिपत्तयः? उच्यन्ते—

बार्हस्पत्यास्तावद् देहमात्रात्मवादिनः पारलौकिककर्मतत्फलविमुखाः सुखाय तादात्विकाय भोजनाच्छादनादिभिर्दृष्टैरेवोपायैः प्रयतमाना नानाविधश्रुतिस्मृतिपुराणानुमानादिप्रमाणप्रतिपादितमपि परमेश्वरं प्रत्यक्षातिरिक्तप्रमाणानभ्युपगमेन जडीकृतान्तःकरणा मरणान्तमेव मोक्षं मन्यमाना दुर्दैववैभवेनैव दुर्विनीता नोररीकुर्वते ।

बुद्धमतानुसारिणस्तु बुद्धदेवप्रामाण्या अपि न देहमात्रम् आत्मानम् उपयन्ति, किन्तु प्रत्यक्षातिरिक्तम् अनुमानम् अभ्युपगच्छन्तः प्रतिक्षणविनाशिनं देहादिव्यतिरिक्तं विज्ञानस्कन्धम् आत्मानम् अभ्युपेत्य बन्धमोक्षादिव्यवस्थाम् आस्थाय पारलौकिकमपि किञ्चित् क्रियाकलापम् अवैदिकमेव सेवमानाः सर्वज्ञविज्ञानसन्तानरूपम् ईश्वरम् अखिलस्य भौतिकस्याभ्युपगच्छन्ति ।

G. P. T. 4724. 500. 12-8-21. B

दिगम्बरास्तु देहादिव्यतिरिक्तं देहमात्रपरिमाणम् नियतावयवम् अविनाशिनम् आत्मानम् अभ्युपगच्छन्तः सप्तभङ्गीनयं नाम न्यायम् अवतारयन्तः क्षणभङ्गवादम् अनङ्गीकृत्य स्थिरम् अर्हन्तम् ईश्वरम् उपयन्ति—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति ।

स्याच्छब्दोऽयम् अप्यर्थे निपातः। तेन च सर्वेषाम् अनैकान्तिकत्वम् आदर्शितम् । तथाचायमर्थः। सदेव सर्वमिति सांख्याः, असदेव सर्वमिति माध्यमिकाः, सदसदेव सर्वमिति तार्किकाः, अनिर्वचनीयमेव सर्वम् इत्यौपनिषदाः। अनिर्वचनीयत्वं च सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वम् । तेन सदपि, असदपि, सदसदपि, अनिर्वचनीयमपीति प्रत्येकं चत्वारो भङ्गाः, सदपि सद्विलक्षणमपि, असदपि असद्विलक्षणमपि, सदसदपि सदसद्विलक्षणमपीत्यनिर्वचनीयतासमुच्चयेन त्रयो भङ्गा इति मिलित्वा सप्तभङ्गीनय एवं धर्मान्तरेऽपि योज्यः । तथाच न क्षणिकत्वसिद्धिः सर्वेषां पदार्थानां सप्तरूपताया अनुभवादित्यभिप्रायः ।

माध्यमिकास्तु सप्तभङ्गीनयन्यायस्य शून्यतापर्यवसायित्वात् सर्वानिर्वचनीयत्वेन शून्यमेवेश्वर इति सर्वप्रमाणापलापेनैव प्रगल्भमानाः परिकल्पयन्ति ।

एवं सर्वेऽपि नास्तिका वेदप्रमाणशून्यतया यत्किञ्चिज्जल्पन्ति ।

आस्तिकास्तु सर्वेऽपि वेदप्रामाण्यम् अव्याहतं मन्यमाना देहादिव्यतिरिक्तम् आत्मानं नित्यं विभुम् उपगच्छन्ति। परन्तु परमेश्वरे केचन विप्रतिपद्यन्ते । तथाहि —

पातञ्जला मन्यन्ते "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" (पात० १. २४) इति । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । क्लेशमूलः कर्माशयो दृष्टादृष्टवेदनीयः । विपाको जात्यायुर्भोगाः। आशयो वासना। एतैः संसारी पुरुषो विवेकाभावेन परामृश्यत इव जलप्रतिबिम्बितचन्द्र इव जलकम्पादिभिः । यस्तु सर्वज्ञत्वात् तैर्न परामृश्यते, स पुरुषविशेषः शुद्धज्ञानस्वरूपः सर्वज्ञः सर्वव्यापको नित्यश्च परमेश्वर इति । प्रमाणं चानुमानम् आहुः — "तत्र निरतिशयं सर्वज्ञबीजम्" (पात० १. २५) इति । सर्वज्ञशब्दो भावप्रधानः "द्व्येकयोरि"तिवत् । तथाच विज्ञानैश्वर्यतारतम्यं क्वचिद् विश्रान्तम् अणुत्वमहत्त्वभावेनोत्कृष्यमाणत्वात् परिमाणतारतम्यवद् इत्यनुमानं सूचितम् । तथाच एकविषयवद् द्विविषयत्रिविषयत्वादिनोत्कृष्यमाणं ज्ञानं यत्र सर्वविषयत्वेनोत्कृष्यते स सर्वज्ञः, सर्वविषयैश्वर्ययोगाच्च सर्वेश्वरः सिद्ध इति ।

वैशेषिकास्तु जन्यमात्रकर्तृत्वेन परमेश्वरम् अनुमिमते । तथाहि—घटादीनां जन्यानां कुलालादयः कर्तारो जनका दृष्टा इति क्षित्यादेरपि सावयवस्य जन्यस्य केनचित् कर्त्रा भवितव्यम् । कर्ता चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृ-

तिमान् । न च क्षित्याद्युपादानपरमाण्वादिगोचरापरोक्षज्ञानवान् संसारी भवति । तस्माद् नित्यज्ञानचिकीर्षाकृतिमान् सर्वज्ञः परमेश्वरः सिद्ध इति । तथाच क्षितिः सकर्तृका कार्यत्वाद् घटवद् इत्यनुमानं सूचितम् ।

नैयायिकास्तु सर्वकर्मफलदायित्वेनेश्वरम् अनुमिमते। तथाचाहुः — "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" (न्याय० ४. ३. १९) इति । सर्वमचेतनं चेतनाधिष्ठितं सत् प्रवर्तते । धर्माधर्माख्यं कर्माचेतनं येन चैतन्येनाधिष्ठितं सत् स्वफलदानाय प्रवर्तते, स सर्वज्ञः परमेश्वर इति । इदं च सूत्रम् ईश्वरोपादानत्वे पूर्वपक्षभूतमपि तन्निमित्तत्वे सिद्धान्त एवेति द्योतकभूतयः ।

एवं पशुपतिरेव पाशुपतागमसिद्धः परमेश्वर इति पाशुपताः ।

चतुर्व्यूहात्मको विष्णुरेवेति पाञ्चरात्रिकाः ।

हिरण्यगर्भ एव परमेश्वरः, स एव विष्णुशिवादिरूपतामपि गृह्णातीति हैरण्यगर्भाः ।

वेदान्तवेद्यः सच्चिदानन्दरूपः सर्वज्ञः सर्वशक्तः सर्वजगदुपादानं निमित्तं च परमात्मैव परमेश्वर इति ब्रह्मवादिनः।

अत्राहुः सांख्याः — संसारिपुरुषविलक्षणे परमेश्वरे किं प्रमाणं? न तावत् पातञ्जलोक्तम् अनुमानम्, अप्रयोजकत्वात् । यथा हि परिमाणतारतम्यं नैकत्रैव विश्रान्तं, किन्त्वणुत्वं परमाणुषु महत्त्वं च परममहत्सु कालाकाशादिष्विति

तार्किकमतं दृष्टान्तीकृतं, तथा च दार्ष्टान्तिकेऽपि अल्पविषयत्वविश्रान्तिर्वक्तव्या । तदनभ्युपगमे च परिमाणतारतम्यं कथं दृष्टान्तः । एवञ्चाल्पत्वविश्रान्तिरेकविषयत्वेन बहुत्वविश्रान्तिश्च परार्धविषयत्वेनेति न सर्वज्ञसिद्धिः । संख्यातारतम्ये व्यभिचाराच्च ।

नापि वैशेषिकोक्तं जगत्कर्तृत्वानुमानं, व्याप्यत्वासिद्धेः । नहि जन्यत्वेन जन्यत्वं कर्तृत्वेन कर्तृत्वमिति व्याप्तिरस्ति, जन्यत्वेन जन्यत्वे जनकत्वेन जनकत्वाद् अविशेषाद् । अन्यथा (न ?) जन्यमात्रे संप्रदानादेरप्यनुमानं स्यात् क्वचित् दर्शनात् । नचैकस्य कर्तृत्वं सिध्यति विचित्रप्रासादादौ बहुकर्तृत्वदर्शनात्, चतुर्दशभुवनरचनाया अप्यतिविचित्रत्वात् । अकारणपारिमाण्डल्यादिज्ञाने च मानाभावाद् न ज्ञानस्य सर्वविषयत्वासिद्धिः । नित्यत्वेन सर्वविषयत्वं विषयतया संकोचकाभावात्; जन्यं हि कारणविशेषवशात् संकुचितविषयं भवतीति चेन्न, अनित्यत्वेन क्वापि सर्वविषयत्वदर्शनाद् अनित्यस्यापि योगिज्ञानस्य (प्रयोमि ?)ति ज्ञानस्य च सर्वविषयत्वाच्च । नित्यत्वे किं मानं? शरीरेणानवच्छेदात, शरीरावच्छेदेन हि ज्ञानम् उत्पद्यते, परमेश्वरस्य च नास्ति शरीरं धर्माधर्मशून्यत्वादिति चेद्, न तावद् असिद्धं, साक्षात् प्रयत्नाधिष्ठेयं हि शरीरम् उच्यते, परमेश्वरस्य च साक्षात् प्रयत्नाधिष्ठेयाः परमाणवः । अतः परमाणुशरीरत्वम् ईश्वरस्य युक्तम् । इदमेवाङ्गीकृतम् उदयनाचार्यैः टीकाप्रथमश्लोकव्याख्याने । आकाशो वा तस्य शरीरम् "आकाशशरीरं ब्रह्मे"ति

श्रुतेः । तथाच तस्यापि शरी(र?रि)त्वसम्भवाद् ज्ञानत्वेन जन्यत्वमिति व्याप्तिर्न भञ्जनीया । एतेन शरीराजन्यत्वेन क्षित्यादेः कर्त्रजन्यत्वमिति मीमांसकमतमपि प्रत्याख्यातं, क्षित्यादेः तच्छरीरपरमाणुजन्यत्वात् । तथाच अनित्यज्ञानवान् सर्वज्ञकल्पः सिद्धः, क(श्चि)देव परमेश्वरत्वेन व्यवह्रियते, स च प्रतिकल्पं भिद्यते, तत्परतयैव सर्वे श्रुतिस्मृतिवादा योजयितव्या इति निर्विवेकतया सांख्यैरुक्तम् ।

अत्रोच्यते ब्रह्मवादिभिः — अनुमानादीश्वरसिद्धिर्नास्तीति यदुक्तं, तत् तथैव तस्य स्वातन्त्र्येणातीन्द्रियार्थासाधकत्वात् । परन्तु वेदान्तात् सिद्धिः ।

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।"
"तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥"

"न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥"

"विज्ञानमानन्दं ब्रह्म ।"

इत्याद्याः श्रुतयः सर्वज्ञसर्वशक्तिपरमानन्दरूपं हिरण्यगर्भादिसकलसिद्धिकारणं परमेश्वरं प्रतिपादयन्ति सहस्रशः । नचैतासाम् अन्यपरत्वं संभवति, उपक्रमादिषड्विधलिङ्गानां परमेश्वर एवोपलम्भात् । नच कार्य एवार्थे वेदस्य

प्रामाण्यं सिद्धमिति वाच्यम् । कार्यपरत्वस्य प्रामाण्याप्रयोजकत्वात्, "चैत्यं वन्देत स्वर्गकाम" इत्यादिनास्तिकवाक्यस्यापि प्रामाण्यप्रसङ्गात् । तत्र च दुष्टकरणत्वेनैवाप्रामाण्ये प्रामाण्यम् अदुष्टकरणत्वेनैवेति कार्यपरत्वम् अप्रयोजकम् । तस्मात् प्रयोजनवदबाधिताज्ञातज्ञापकत्वमेव प्रामाण्यं न कार्यपरत्वं चेति विस्तृतमन्यत्र ।

एवं सिद्धे परमेश्वरे तद्विशेषनिरूपणं क्रियते । तत्र पञ्चधा विष्णुरिति मुक्ताफलकाराः । तथाहि— साकारनिराकारभेदेन प्रथमं द्विधा । तत्र निराकर एकरूप एव । साकारश्चतुर्धा —पुरुषो ब्रह्मा विष्णुर्महेश्वरश्चेति । एवमेव शिवतन्त्रे व्यक्तम् —

"ब्रह्मा विष्णुर्महादेव ईश्वरश्च सदाशिवः ।"

इति । तत्र सदाशिवो निराकारश्चेति निरुपाधिचैतन्यस्वरूपः सिद्ध एकः पुरुषः । ईश्वरश्चेति गुणत्रयावच्छिन्नमायोपाधिरेकः, रजोगुणावच्छिन्नो ब्रह्मा, सत्त्वगुणावच्छिन्नो विष्णुः, तमोगुणावच्छिन्नो रुद्र इति ।

नृसिंहतापनीये तु चतुर्धा विभाग उक्तः—"ओतोऽनुज्ञाता अनुज्ञाविकल्पः" इति । तत्र पञ्चीकृतमहाभूताभिमानी विराट् तदन्तर्यामी परमात्मा ओतः स्थूल उच्यते, स एवानिरुद्धः। एवमपञ्चीकृतमहाभूताभिमानी जीवो हिरण्यगर्भः, तदन्तर्यामी अनुज्ञाता परमात्मा सूक्ष्म उच्यते; स एव प्रद्युम्नः । गुणत्रयावच्छिन्नमायोपाधिरव्याकृतरूपः सर्वबीजम् अनुज्ञोच्यते; स एव सङ्कर्षणः । अयमेव पुरुष ईश्वरश्च

प्रागुक्तः । एतस्यैव भेदा ब्रह्मविष्णुमहेश्वराः, त्रिगुणावच्छिन्न एकैकगुणावच्छिन्नस्यान्तर्भावात् । अत एव पृथङ् नोक्ताः । सर्वोपाधिविनिर्मुक्तस्त्वविकल्पो वासुदेवः परमात्मा मोक्षावलम्बनम् । स एव सदाशिवो निराकारश्च । एतेषां चतुर्णां जाग्रत्स्वप्नसुषुप्ततुरीयभेदेन षोडशावस्था भवन्ति ।

तथाहि — चक्षुरादिकरणवृत्त्या स्थूलविषयपरिज्ञानं जाग्रज्जागरणं, बाह्यकरणव्यापारशून्यमनोवृत्त्याविद्यावृत्त्या वा जायमानं स्मरणविभ्रमादि जाग्रत्स्वप्नः, बाह्यान्तर्विषयानुभवस्तब्धभावम् अन्तरेण केवलस्यैवावस्थानं स्तब्धीभावापरपर्यायं जाग्रत्सुषुप्तिः, बाह्यान्तर्विषयानुभवस्तब्धीभावव्यतिरेकेण पुण्यपुञ्जपरिपाकादज्ञस्यापि साक्षिमात्रानुभवो गुरूपदेशात् त्वम्पदलक्ष्यशुद्धसाक्षिमात्रानुभवो वा जागरणंतुरीयमिति चतुर्विधं जागरणम् ।

तथा स्वप्नेऽपि देवतादिप्रसादाद् यन्त्रादिप्राप्तिः स्वप्नजागरणं स्वाप्नैरेवेन्द्रियैः स्वप्ने रूपाद्यनुभवो वा, स्वप्नेऽपि स्वप्नोऽयं मया दृष्ट इत्यनुभवः स्वाप्नमनसैव स्मरणादिकं वा स्वप्नस्वप्नः, स्वप्नेऽपि स्तब्धीभावरूपा प्रबोधे वक्तुमशक्या काचिद् वृत्तिः स्वप्नसुषुप्तिः, एवं स्वप्नेऽपि पुण्यपुञ्जपरिपाकाद्वा तत्रत्याचार्योपदेशाद् वा अहमेव सर्वोऽस्मीति वेदार्थानुभवः स्वप्नतुरीयमिति चतुर्विधः स्वप्नः ।

एवं सर्वबाह्यान्तःकरणवृत्तिशून्या ज्ञानमात्रशेषापि सुषुप्त्यवस्था ज्ञानस्य गुणत्रयभेदाभ्या(सात्) सत्त्वमात्रवृत्ति-

मती भवति सुखम् अहम् अस्वाप्सामिति परामर्शजनिका, सा सुषुप्तिजागरणम्। एवं रजोमात्रवृत्तिमती दुःखम् अहम् अस्वाप्सामिति परामर्शहेतुः सा सुषुप्तिस्वप्नः, तथा तमोमात्रवृत्तिमती गाढमूढोऽहम् आसमिति परामर्शकारणं सा सुषुप्तिसुषुप्तिः, एतादृशसर्ववृत्तिशून्या तु साक्षिचिन्मात्ररूपा सा सुषुप्तितुरीयमिति चतुर्विधा सुषुप्तिः। सर्वावस्थात्रयं परित्यज्य तुरीयावस्थैवादेया वासुदेवपर्यवसायिनी।

एतास्तिस्रोऽवस्थाः अज्ञविज्ञसाधारण्यः। तुरीयावस्था तु विज्ञस्यैव। सापि चतुर्विधा सवव्यष्टीनां समष्ट्यनतिरेकादात्मानं सर्वस्थूलसमष्टिरूपं विराजं ब्रह्माण्डमयविग्रहं ज्ञात्वा सर्वस्थूलाभिमानिजीवचैतन्यस्य तदन्तर्याम्यनिरुद्धचैतन्येनाभेदज्ञानं तुरीयजागरणम्। एवं सर्वस्थूलानां तत्कारणभूतसूक्ष्मानतिरेकादपञ्चीकृतमहाभूतविग्रहं हिरण्यगर्भम् आत्मानं ज्ञात्वा तदभिमानिजीवचैतन्यस्य तदन्तर्यामिप्रद्युम्नचैतन्येनाभेदज्ञानं तुरीयस्वप्नः। एवं स्थूलसूक्ष्मयोः कारणानतिरेकात् सर्वकारणम् अव्याकृतम् अज्ञानमात्रोपाधिम् आत्मानं ज्ञात्वा तत्प्रतिबिम्बितजीवचैतन्यस्य बिम्बभूतान्तर्यामिसंकर्षणचैतन्येनाभेदज्ञानं तुरीयसुषुप्तिः। जडस्य सर्वस्य कल्पितत्वेनाधिष्ठानचैतन्यानतिरेकात् सर्वोपाधिशून्यं त्वम्पदलक्ष्यम् आत्मानं ज्ञात्वा अद्वितीयशुद्धचैतन्येन पूर्णेन सहाभेदपरिज्ञानात् तद्रूपेणैवावस्थानं तुरीयतुरीयम्।

एता एवौतानुज्ञात्रनुज्ञाविकल्पाख्याः स्थूलसूक्ष्मबीजसाक्षिभूता अकारोकारमकारोङ्कारवाच्या अनिरुद्धप्रद्युम्न-

संकर्षणवासुदेवरूपेण पर्यवस्यन्ति चतस्रोऽवस्थाः । अत्र प्रत्येकं मन्त्रास्तन्न्यासादयश्च गुरूपदेशादवसेयाः किमधिकेन ॥

इति श्रीमधुसूदनसरस्वतीविरचितः
ईश्वरप्रतिपत्तिप्रकाशः
समाप्तः ।

---

शुभं भूयात् ।

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nilakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatîya Sarvânanda. (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswamin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Srî Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Srî Krishnânanda Sarasvati (Part IV.) | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadipika of Chitrabhanu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66—महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara. (Part I. 1–6 Patalas) | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Srî Bhojadeva with the commentary Tâtparyadîpikâ of Srî Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः (Tantra) by Narayana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part II. Mantrapada) | 4 | 0 | 0 |
| No. 73.—ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati | 0 | 4 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*

## IN THE PRESS.

1. Silparatna (Silpa)
2. Manjusrimulakalpa (Part II).
3. Yajnavalkyasmriti with the commentary Balakrida of Visvarupacharya.
4. Kavyaprakasa (Alankara) with the commentary Sampradayaprakasini of Sri Vidyachakravartin and the Sahityachudamani of Bhattagopala.
5. Asvalayanagrihya with the commentary Anavila of Haradatta.

## UNDERTAKEN FOR PUBLICATION.

1. Asvalayanagrihya with Devasvamin's Bhashya.
2. Arthasastra of Kautilya.
3. Pramanalakshana (Mimamsa) by Sarvajnatmapada.
4. Sarasvatikanthabharana (Vyakarana) of Bhoja with the Vritti of Narayana.
5. Vishnusamhita (Agama).
6. Uttaragargya Do.
7. Slokavartika (Mimamsa) with the Kasikatika of Sucharitamisra.

